सुदुर्लभे नार्हति कोऽभिनन्दितुं प्रकर्षलक्ष्मीमनुरूपसंगमे । (**किरातार्जुनीये** ।)

सुपर्वणो हि स्फुटभावना या सा पूर्वरूपं फलभावनायाः । (**शिशुपालवधे** ।)

सुरेषु हि श्रद्दधतां नभस्या सर्वार्थसिद्धयङ्गमिथः समस्या । (**शिशुपालवधे** ।)

सुलभा रम्यता लोके दुर्लभं हि गुणार्जनम् । (**किरातार्जुनीये** ।)

सुलभो हि द्विषां भङ्गो दुर्लभा सत्स्ववाच्यता । (**किरातार्जुनीये** ।)

सुहृदर्थमीहितमजिह्मधियां प्रकृतेर्विराजति विरुद्धमपि । (**शिशुपालवधे** ।)

सूर्यापाये न खलु कमलं पुष्यति स्वामभिख्याम् ।( **मेघदूते**।)

सूर्ये तपत्यावरणाय दृष्टेः कल्पेत लोकस्य कथं तमिस्रा । (**रघुवंशे** ।)

सेवाधर्मः परमगहनो योगिनामप्यगम्यः ।

सौख्यं धन्याः किमपि दधते सर्वसंपत्समृद्धाः ।

स्तवे रवेरप्सु कृताप्लवैः कृते न मुद्वती जातु भवेत्कुमुद्वती । (**नैषधीयचरिते** ।)

स्तोत्रं कस्य न तुष्टये । (**कुमारसंभवे** ।)

स्त्रियश्चरित्रं पुरुषस्य भाग्यं देवो न जानाति कुतो मनुष्यः ।

स्त्रियो नष्टा ह्यभर्तृकाः ।

स्त्रियो यथा विचेष्टन्तां निष्कम्पं हि सतां मनः । (**कथासरित्सागरे** ।)

स्त्रीचित्तमहो विचित्रमिति । (**कथासरित्सागरे** ।)

स्त्रीचित्तस्यैव दैवस्य को वेत्ति गहनां गतिम् । (**कथासरित्सागरे** ।)

स्त्रीणां पतिः प्राणा न बान्धवाः । (**कथासरित्सागरे** ।)

स्त्रीणां प्रियालोकफलो हि वेषः । (**कुमारसंभवे** ।)

स्त्रीणां भावानुरक्तं हि विरहासहनं मनः । (**कथासरित्सागरे** ।)

स्त्रीणामलीकमुग्धं हि वचः को मन्यते मृषा । (**कथासरित्सागरे** ।)

स्त्रीणामाद्यं प्रणयवचनं विभ्रमो हि प्रियेषु । (**मेघदूते** ।)

स्त्रीपुमानित्यनास्थैषा वृत्तं हि महितं सताम् । (**कुमारसंभवे** ।)

स्त्रीपुंवच्च प्रभवति यदा तद्धि गेहं विनष्टम् ।

स्त्रीबुद्धिः प्रलयावहा ।

स्त्रीभिः कस्य न खण्डितं भुवि मनः ।

स्त्रीवचःप्रत्ययो हन्ति विचारं महतामपि । (**कथासरित्सागरे** ।)

स्त्री विनश्यति रूपेण ।

स्त्रीषु वाक्संयमः कुतः । (**कथासरित्सागरे** ।)

स्त्रीष्वनर्गलचेष्टासु कस्येच्छा नोपजायते । (**कथासरित्सागरे** ।)

स्थातुं नियोक्तुर्नहि शक्यमग्रे विनाश्य रक्ष्यं स्वयमक्षतेन । (**रघुवंशे** ।)

स्थितः पृथिव्या इव मानदण्डः । (**कुमारसंभवे** ।)

स्नापितोऽपि बहुशो नदीजलैर्गर्दभः किमु हयो भवेत्क्वचित् ।

स्निग्धमुग्धा हि सत्स्त्रियः । (**कथासरित्सागरे** ।)

स्निग्धो हि विरहायासे साधुवादं ददाति किम् । (**कथासरित्सागरे** ।)

सुधात्वं पापानां फलमधनगेहेषु सुदृशाम् ।

स्नेहानाहुः किमपि विरहे ध्वंसिनस्ते त्वभोगादिष्टे वस्तुन्युपचितरसाः प्रेमराशीभवन्ति । (**मेघदूते** ।)

स्नेहः पापशङ्की । (**अभिज्ञानशाकुन्तले** ।)

स्पृशन्ति न नृशंसानां हृदयं बन्धुबुद्धयः । (**नैषधीयचरिते** ।)

स्पृशन्त्यस्तारुण्यं किमिव नहि रम्यं मृगदृशः ।

स्पृशन्नपि गजो हन्ति ।

स्मर्तुमधिगतगुणस्मरणाः पटवो न दोषमखिलं खलूत्तमाः । (**शिशुपालवधे** ।)

स्रोतोरत्नं विबुधतटिनी ।

स्वकर्मसूत्रग्रथितो हि लोकः ।

स्वगृहे पूज्यते मूर्खः ।

स्वग्रामे पूज्यते प्रभुः ।

स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते । (**कुमारसंभवे** ।)

स्वजनालोकवातेद्धो दुःखाग्निः कं न तापयेत् । (**कथासरित्सागरे** ।)

स्वजातीयविघाताय महात्म्यं दृश्यते नृणाम् ।

स्वत एव सतां परार्थता ग्रहणानां हि यथा यथार्थता । (**शिशुपालवधे** ।)

स्वदेशजातस्य नरस्य नूनं गुणाधिकस्यापि भवेदवज्ञा ।

स्वदेशे पूज्यते राजा ।

स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ।

स्वपन्त्यज्ञा हि निश्चेष्टाः कुतो निद्रा विवेकिनाम् । (**कथासरित्सागरे** ।)

स्वपदाक्रम्यमानस्य कस्याज्ञां को हि मन्यते । (**कथासरित्सागरे** ।)
स्वभाव एवैष परोपकारिणाम् ।
स्वभावतः सर्वमिदं हि सिद्धम् ।
स्वभावस्वच्छानां पतनमपि भाग्यं हि भवति ।
स्वमहिमदर्शनमक्ष्णोर्मुकुरतले जायते यस्मात् ।
स्वयशांसि विक्रमवतामवतां न वधूष्वघानि विमृशन्ति धियः । (**किरातार्जुनीये** ।)
स्वयमेव हि वातोऽग्नेः सारथ्यं प्रतिपद्यते । (**रघुवंशे** ।)
स्ववीर्यगुप्ता हि मनोः प्रसूतिः । (**रघुवंशे** ।)
स्वसुखं नास्ति साध्वीनां तासां भर्तृसुखं सुखम् । (**कथासरित्सागरे** ।)
स्वस्थः को वा न पण्डितः ।
स्वस्थे चित्ते बुद्धयः संभवन्ति ।
स्वादुभिस्तु विषयैर्हृतस्ततो दुःखमिन्द्रियगणो निवार्यते । (**रघुवंशे** ।)
स्वाधीनकुशलाः सिद्धिमन्तः । (**अभिज्ञानशाकुन्तले** ।)
स्वाधीना दयिता सुतावधि ।
स्वामापदं प्रोज्झ्य विपत्तिमग्नं शोचन्ति सन्तो ह्युपकारिपक्षम् । (**किरातार्जुनीये** ।)
स्वामिन्यसाध्यव्यसने सुखं सन्मन्त्रिणां कुतः । (**कथासरित्सागरे** ।)
स्वेद्यमामज्वरं प्राज्ञः कोऽम्भसा परिषिञ्चति । (**शिशुपालवधे** ।)
स्वेनानलस्य स्फुटतां यियासोः फूत्कृत्यपेक्षा कियती खलु स्यात् । ( **शिशुपालवधे** ।)
हंसो यथा क्षीरमिवाम्बुमध्यात् ।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयन्त्यपः । (**अभिज्ञानशाकुन्तले** ।)
हंहो पद्मसरः कुतः कतिपयैर्हंसैर्विना श्रीस्तव ।
हतं ज्ञानं क्रियाहीनम् ।
हतं निर्नायकं सैन्यम् ।
हतं सैन्यमनायकम् ।
हतश्चाज्ञानतो नरः ।
हतविधिपरिपाकः केन वा लङ्घनीयः ।
हरति मनो मधुरा हि यौवनश्रीः । (**किरातार्जुनीये** ।)
हसन्नपि नृपो हन्ति ।
हस्तस्य भूषणं दानम् ।
हा कष्टं खलु वर्तते कलियुगे धन्या नराः सज्जनाः ।
हास्यादृते किमन्यत्स्यादतिलौल्यवतां फलम् । (**कथासरित्सागरे** ।)
हा हा तथापि विषयान्न जहाति चेतः ।
हितः परोऽपि स्वीकार्यो हेयः स्वोऽप्यहितः पुनः । (**कथासरित्सागरे** ।)
हितप्रयोजनं मित्रम् ।
हितभुङ्मितभुगशाकभुक् ।
हितमारण्यमौषधम् ।
हितं मनोहारि च दुर्लभं वचः । (**किरातार्जुनीये** ।)
हितैषिणः सन्ति न ते मनीषिणः ।
हितोपदेशो मूर्खस्य कोपायैव न शान्तये । (**कथासरित्सागरे** ।)
हीनान्यनुपकर्तॄणि प्रवृद्धानि विकुर्वते …………मित्राणि । (**रघुवंशे** ।)
हेम्नः संलक्ष्यते ह्यग्नौ विशुद्धिः श्यामिकापि वा । (**रघुवंशे** ।)
ह्यर्थो हि लोके पुरुषस्य बन्धुः ।
ह्रदे गभीरे हृदि चावगाढे शंसन्ति कार्यावतरं हि सन्तः । (**नैषधीयचरिते** ।)

# श्लोकानुक्रमणिका.

समाप्तेयं सुभाषितरत्नभाण्डागारश्लोकानुक्रमणिका।